नयाच्यंमेजगन्नाथभूराज्यंममसांप्रतम् ॥ १८३ ॥ स्वर्गश्चकर्म्मभिःप्राप्तोभक्तिस्त्वत्पाददर्शनात् ॥ आरोग्यंपश्यभुंजेहंसासीतायोषितांवरा ॥ १८४ ॥ वशीकृताःसर्वनृपाःप्रजाधर्मसमन्विताः ॥ हर्षएवममापन्नस्त्वदागमनतोच्युत ॥ १८५ ॥ तथापिवरयेकिंचिद्भक्तिरस्तुस्थिरात्वयि ॥ तथामम गृहेदेवत्रिवर्षेतिष्ठहेप्रभो ॥ १८६ ॥ ब्रुवन्समस्तधर्मांश्चरूपेणानेनशंकर ॥ ॥ शिवउवाच ॥ एवमस्तुतथारामसर्वंतेसंभविष्यति ॥ १८७ ॥ अथाहचक्रीराजानंरामंराजीवलोचनम् ॥ वरंवृणुमहाभागप्रसन्नोहंयामिच्छसि ॥ १८८ ॥ श्रीरामआहवचनंममप्रार्थ्यंनचास्तिहि ॥ यत्प्राप्यंशंभु तःप्राप्तमन्यत्सर्वमुदीरितम् ॥ १८९ ॥ किंचैकंवरयेविष्णोप्रसन्नःसर्वदाभव ॥ अथसीतांहरिःप्राहप्रसन्नोहंतवाधुना ॥ १९० ॥ वरंवृणुप्रयच्छामि ततःसिताब्रवीदिदम् ॥ वरोवृतःपुराभर्त्रानचान्योमेवरोवरः ॥ १९१ ॥ यदिकामंप्रयच्छेथामनश्चपरपूरुषात् ॥ संनिवृत्तंचभवतान्नमस्तेस्तुद्विजप्र भो ॥ १९२ ॥ अथतेमुनयःसर्वेप्रणेमुर्दैवतोत्तमौ ॥ अथासौराघवंप्राहभुंक्ष्वत्वंबंधुभिःसह ॥ १९३ ॥ एकांतमंदिरेरम्येदेव्यासहवसामिते ॥ विष्णुः समस्तकरणःसमुद्रतनयान्वितः ॥ १९४ ॥ एकस्मिन्मंदिरेरामतिष्ठतांलोलुपोहिसः ॥ अथशुद्धमहागारेपीठाव्येवहुभाजने ॥ १९५ ॥ अग्रेवसिष्ठो भगवानुपविष्टस्तयोर्मुनिः ॥ अपरेऋषयःसर्वेयथावृद्धंनृपास्तथा ॥ १९६ ॥ तेषामभिमुखोरामोभ्रातृभिःसहितोनृपः ॥ तरुणेसमभागेचआसनेतान वेशयत् ॥ १९७ ॥ हनूमत्प्रमुखान्भृत्यानाहरामोनुसांत्वयन् ॥ भवंतःपरितिष्ठंतुपश्चाद्भुंजेनचान्यथा ॥ १९८ ॥ ततस्तेप्रददुःसर्वेपा दार्घानतुपूर्वशः ॥ बुभुजुश्चापितेसर्वेयेरामस्योपसेविनः ॥ १९९ ॥ तेषांदत्वाथतांबूलंकर्पूराद्रादीनभोजयत् ॥ भुक्तवत्सुसमस्तेषुरामोराजीवलो चनः ॥ २०० ॥ दीनांधकृपणादीनांपशुपक्षिमृगस्यच ॥ दत्वाहिभोजनंसंध्यांवंदितुंहिसमारभत् ॥ २०१ ॥ संध्याजपादिकंकृत्वानत्वाते षांनृपस्ततः ॥ सिंहासनगतोरामःपौरजानपदादिभिः ॥ २०२ ॥ सेव्यमानःसभास्थानगतोरेजेसराघवः ॥ सर्वदेवपरीवारोयथादेवःशचीप तिः ॥ ३ ॥ राजकार्यमशेषंचकृतवान्भ्रातृभिःसह ॥ नाम्नाचैकैकशःसर्वान्विससर्जसराघवः ॥ ४ ॥ भ्रातॄन्विसर्जयामासवानरादींस्तथापरान् ॥ अथरामंमहातेजावसिष्ठोवाक्यमुक्तवान् ॥ ५ ॥ तवप्रातर्हियत्कार्यंनचविस्मरराघव ॥ आस्तेशंभुर्जगन्नाथोभगवानंबिकापतिः ॥ ६ ॥ स्मर्तव्योवन्दनीयश्चभगवानथयत्नतः ॥ तथेत्युक्त्वागुरुंराजानत्वातंचव्यसर्जयत् ॥२०७॥ स्वयंचभार्यामभजद्देवदेवंविचिंतयन् ॥ ॥ ऋषयऊचुः ॥ ॥



१ चाहम्–इ० पा० । २ तथेति–इ० पा । ३ भूभुजः–इ० पा० ।

प्रातःसमुत्थायगुरोरामोमतिमतांवरः ॥ किंचकारतदाख्याहिश्रोतुंकौतूहलंहिनः ॥ ८ ॥ ॥ सूतउवाच ॥ ॥ शंभुंविलोक्याथततोवभाषे रामःकथांकीर्त्तयशंकरस्य ॥ तृप्तिर्नजातामुनिवर्यशृण्वतोमहेशमाहात्म्यमघौघनाशनम् ॥ ९ ॥ ॥ शंभुरुवाच ॥ ॥ अथप्रश्नशेषस्यो त्तरमीशभाषितंतेकीर्तयिष्यामि ॥ अन्यायोपार्जितद्रव्यैरीश्वरंयउपासतेतेव्यंगाजायंते ॥ २१० ॥ तद्यथाकश्चिद्रूपकोनामराक्षसोऽन्यायार्जितेन द्रव्येणशंकरमाराध्यतेनैवद्रव्येणघंटामीश्वरप्रीतयेकृतवान् ॥ ११ ॥ तस्यपुत्रःसंपातिरितिख्यातः ॥ चौर्य्यार्जितैःशंकरंपूजयामास ॥ १२ ॥ तावुभावे कस्मिन्दिवसेमम्रतुःगतौशिवलोकंवीरभद्रेणभाषितौच ॥ २१३ ॥ भोरूपकअन्यायार्जितेनद्रव्येणभवतापूजाकृताघंटादिकंचतेनभावेनव्यंगोभूत्वा चौरगणोभविष्यसि ॥ २१४ ॥ शिवपदवचनाद्व्यक्तंनामाश्रवणात् ॥ श्रोत्रंतस्यस्वनेनध्वस्तंभवतिनोदर्शनमेतावतादेवत्वयेश्वरपूजासम्यक्कृता ॥ १५ ॥ अतोभक्तिश्चभविष्यतिवीरभद्रस्त्वनशनंनामगणंक्वचिद्विचरंतमित्यादिदेश ॥ १६ ॥ तौचतथाभूतौशिवलोकेऽतिष्ठताम् ॥ १७ ॥ ॥ शंभुरुवाच ॥ अथोपहतद्रव्यपूजाकथांहनूमतेमहेशभाषितांकथयिष्यामि ॥ १८ ॥ शृणुराघवप्रमथानांचरित्रमेकैकस्यकर्मविपाकंकथयिष्यामि ॥ १९ ॥ उपहतां गगणव्याख्याक्रियतामितिहनूमत्पृष्टः ॥ ॥ शिवउवाच ॥ ॥२२० ॥ तदुपहतद्रव्यंज्ञानतोयईश्वरेऽर्पयिष्यतिएतदुक्तंज्ञानिनोऽतःशृणु ॥ २१ ॥ एषसर्वा गस्वेदिलःसर्वकालंसर्वागस्वेदिलःस्वेदार्द्रवसनःस्वेदसंपादिताल्पप्रवाहशरीरोनासाग्रनिपतितस्वेदबिंदुःस्पर्शायोग्योदृश्यते ॥ २२ ॥ सपुरास्वेदकरणेश्व रार्चनंकृतवान् ॥ अत्रेतिहासंकीर्तयिष्यामि ॥ २३ ॥ चेकितानिरितिख्यातोब्राह्मणःकर्षकोभवत् ॥ सनित्यंकृषिमुत्पाद्यप्रातःस्नात्वाचनित्य शः ॥ २४ ॥ मध्याह्नकालेसंप्राप्तेसंजपन्ब्राह्मणस्त्वसौ ॥ अन्नमानयमेक्षिप्रमितिभार्यामभाषत ॥ २५ ॥ तयानीतेनचान्नेनवेगेनशिवपूजनम् ॥ कृतवानर्के संतप्तःस्वेदिलःसर्वदैवतु ॥ २६ ॥ गंधपुष्पाक्षताद्यैश्चस्वेदबिंदुसमन्वितैः ॥ अथसायंदिनेप्राप्तेक्षालितांगःसुशोभनः ॥ २७ ॥ पूजयामासदेवेशंकालसंभव साधनैः ॥ ममाराथमहाबुद्धिःशिवलोकंगतश्चसः ॥ २८ ॥ वीरभद्रेणचाप्युक्तोभवत्वंस्वेदिलोगणः ॥ स्वेदस्पृष्टपदार्थैश्चपुराशंभुःप्रपूजितः ॥ २९ ॥ नित्यंस्वेदसमायुक्तस्तेनस्वेदगणोभव ॥ ॥ शंभुरुवाच ॥ ॥ वीरेणाथसमादिष्टःप्राप्तोरामगणस्त्वयम् ॥ २३० ॥ अमुंघंटामुखंपश्यायंपुरावैश्यो विभावसोनामधार्मिकोमहादानकर्त्तानित्यंब्राह्मणभोजनंकारयित्वाकृतानुष्ठानः प्रातःकालेशिवंनमस्कृत्यकुसुमैःसंपूज्य किंचित्प्रदेशंगोमयेनोपलिप्य पद्मादिकमर्जयित्वादेवायसमर्प्यउपहतघंटानादंकृतवान् ॥ २३१ ॥ ॥ रामउवाच ॥ ॥ कथमुपहतघंटा ॥ २३२ ॥ ॥ शंभुरुवाच ॥ ॥ आसी

